ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुल कांगड़ी विश्वविद्यालयस्य मासिक पत्रिका ]

कार्तिक २०२४, अक्टूबर-नवम्बर १९६७, वर्षम् २०, अङ्कः ३, पूर्णाङ्क २३१

## श्रुति-सुधा

( ऋषि:–मेध्यातिथिः काण्व. । देवता–सविता । छन्दः–गायत्री )

ओ३म् हिरण्यपाणिमूतये सवितारमुपह्वये ।
स चेत्ता देवता पदम् ।।

( ऋ. १।२२।५ )

( हिरण्यपाणिं ) सुवर्णीय हाथों वाले ( सवितारं ) सविता देवता को ( ऊतये ) ऊर्ध्वारोहण में रक्षा व वृद्धि के लिये ( उपह्वये ) आह्वान करता हूं । ( स ) वह सवितादेव ( चेत्ता ) चिताने वाला वा जताने वाला है वह ही ( देवता ) सर्वदेवमय है, वह ही ( पदम् ) गन्तव्य व प्राप्तव्य है ।

मनुष्य के लिए ऊर्ध्वारोहण तथा सोमसवन करने वाले भक्त को ( गृह ) हृदय की गहराईयों में बैठना महान् कठिन है । इस में भय भी बहुत है । इसी दृष्टि से एक अन्य मन्त्र मे कहा है—

'आरोहत दिवमुत्तमामृषयो मा बिभीतन'

हे ऋषियो ! उत्तम द्युलोक में आरोहण कर जाओ, डरो मत । यतः ऊर्ध्वारोहण में महान् भय है । परन्तु इस आरोहण में रक्षा का कार्य वह हिरण्यपाणि सविता देव करता है । वह चेता स्वयं ज्ञाता और मार्ग का जताने वाला है । यही गन्तव्य स्थान है । इसी प्रकार हृदय की गहराईयों में डुबकी लगाने वाले की यह सविता ही रक्षा करता है ।

# स्वाभिमानः

विद्याभूषण. श्रीगणेशरामशर्मा, डूगरपुर (राजस्थान)

अद्य तावल्लक्ष्मीचन्द्रस्य वणिजो भवने महा-महोत्सवो वर्तते । सम्पन्नेन महाजनेनानेन नागरिकेन लक्ष्मीचन्द्रवैष्णवेन स्वपुरोहिताय नारायणशर्मणे पूर्व गृहदान सङ्कल्पितमभूत् । तदनुरोधादद्यैव गृहदाननिमित्तमुत्सवोऽयमायोजितोऽस्ति । इत सप्ताहात् पूर्वं वणिजा लक्ष्मीचन्द्रेण श्रीमद्भागवतमहापुराणस्य कथापारायण स्वपुरोधसा नारायणशर्मणा कृतमश्रावि । पारायणसप्ताहे महाधनस्य लक्ष्मीचन्द्रवैष्णवस्य गृहे नित्यमेव हि तत्सम्बन्धिनः कौटुम्बिका ज्ञातयो नागरिका सुहृद. सखाय परिचिता जना. कथाश्रवणार्थं समाजग्मु. । सर्वेऽपि च ते खल्वास्तिका भक्तजना लक्ष्मीचन्द्रवणिजस्तमिमं शुभसङ्कल्प, तस्य वदान्यताभावं, दानशीलतां, त्याग, श्रद्धामास्थां निष्ठा च वहुप्रशंसन्त आसन् । लक्ष्मीचन्द्रोऽपि पुण्यमर्जयन् मनसि मोमुद्यमानोऽवर्तत ।

प नारायणशर्मा पुरोहितस्तत्रत्याना सर्वेषामेव वैष्णवमहाजनाना ज्ञातिसमाजसमष्टे. स्वकुलपरम्पराप्राप्त पौरोहित्य कुर्वाण. समभूत् । स हि शातो दातो विनीत शास्त्रेष्वतितरा व्युत्पन्न कर्मकाण्डक्रियाकलापप्रक्रियासु सहस्तलाघव निष्णातो यदृच्छालाभसन्तुष्टश्च वभूव । सत्यपि चैव प्रायेण विद्वांसो वटव इव नारायणोऽपि च भाग्यकृतदोषादतीव निर्धनो दीनदीन सम्पद्विहीनश्चाभूत् । ब्राह्मणोऽसौ नारायणशर्माऽतीव निर्धनोऽपि स्वात्मगौरवशाली स्वाभिमानधनो महत्त्वाकांक्षी चापि भौतिकपरिग्रहे नितान्तं नि.स्पृहो वितृष्णश्चासीत् । यतस्तस्येदमथं शास्त्रसारसर्वस्वमभूद्—

"अकृत्वा परसन्तापमगत्वा खलमन्दिरम् ।<br>
अक्लेशयित्वा चात्मानं यद्भवेत्तद्धन बहु ।१।

इति । पुरोहितवृत्ति निर्वहन्नपि नारायणशर्मा न कदापि कमपि धनादिकं ययाचे । यावल्लब्धेनैव धनलाभेन स्वकुटुम्बस्य परिपोषणं चक्रे । तस्य गृहे वृद्धौ पितरौ, द्वे विधवे भगिन्यौ, पञ्चकुमारिका. कन्यका, द्वौ पुत्रौ, मायानाम्नी तज्जाया चेत्येते तत्पोष्या. सदस्या अभूवन् । अथैकलस्य नारायणशर्मण परिश्रमेणोद्योगेनैव चामीषां सर्वेषा कथमपि कष्टेन निर्वाहो भवति स्म । इत्थं वर्तमानस्य नारायणशर्मणो वर्तार्थिकी स्थिति दुर्बलां जानानेन लक्ष्मीचन्द्रेण वणिजा धनिकेन तदिद गृहदानमेकदा पुण्ये पर्वणि प्रतिज्ञातमभूत् ।

अथ सप्ताहात् पूर्वमेव लक्ष्मीचन्द्रस्य गृहे कथापारायणप्रसङ्गतो नित्यमेव हि नवनवोत्सवा भजनकीर्तनानि महतोत्साहेनाडम्बरेण च सम्पद्यमानान्यासन् । तस्य सजातीया. सहधर्माणो वैष्णवास्तत्सम्प्रदायानुयायिनस्तथाऽन्येऽपि चास्तिका सनातनवर्णाश्रमधर्मानुयायिनो भक्ता कथाश्रवणानुरागिणो नागरिकाश्च लक्ष्मीचन्द्रस्यास्मिन्नवनिर्मिते प्रासादोपमे गृहे सम्भूय नारायणशर्मणो मुखाद्वाच्यमानां सरसां मधुरां नवरसमयी कर्णपुटेषु पीयूषवर्षिणी श्रीमद्भागवती कथा शृण्वाना आनन्दस्य परां कोटिमिवानुबभूवुः । भक्तिभावोद्रेकात् परमा निर्वृतिं सुखं शांति च विन्दमानास्ते सर्वे श्रोतारो नागरिका नारायणशर्मपण्डितस्य कथावाचनशैली सुललिता मनोमोहिनी, तत्त्वार्थनिरूपणप्रौढी, शास्त्रार्थप्रवचनचातुरी, तन्मर्मज्ञता, तद्वैदुष्य, गुणवत्तां चातितरां प्राशंसन् : दीनहीनार्थिकस्थितेरपि नारायणशर्मणो ज्ञानगम्भीरां मर्मस्पर्शिणी विद्वत्तां सर्वेऽप्युन्मुक्तकण्ठं हृदयेनाश्लाघन्त । वस्तुतस्तत्समाजे नारायणशर्मण किमपि स्वयंसिद्धं वर्चस्वित्वं, महत्त्वपूर्णा प्रतिपत्ति , प्रभावः, प्रतिष्ठा च समभूत् ।

अथ च समाप्तिं गते श्रीमद्भागवतपारायणे,

सम्प्राप्ते च पूर्णाहुतिदिने यजमानो लक्ष्मीचन्द्रो वणिङ् नारायणशर्मणे पूर्वसङ्कल्पितं भवनं दातुं सयत्नो बभव । तस्मिन् दातव्ये भवने सर्वकक्षेषु नानाविधा सामग्र्यो जीवननिर्वाहोपयुक्ता शय्यासनपर्यङ्कादयाऽन्नवस्त्वसम्भारा स्वर्णरजतालङ्कारा पात्राणि वस्त्राणि, शृङ्गारसाधनोचितानि दर्पणतैलकूपिकादीन्युपकरणानि, मिष्टान्नानि, शाकफलानि, गृहस्थाश्रमाचितास्ते ते सर्वे पदार्था वस्तुजातानि च सस्थापितान्यभूवन् । अभूतपूर्वमिवायोजनम्दिमासीत् । किं बहुना, तत्र भवने सर्वेऽपि भोग्यपदार्था धान्यानि धनानि च तथा निहितान्यामन यैस्तत्र गृहस्थाश्रमं प्रविविक्षार्जनस्य कृते न किमप्यपहीयते स्म ।

प्राप्ते च दानस्य शुभे मुहूर्तसमये लक्ष्मीचन्द्रस्य गृहे प्रात कालादारभ्यैव लोकाना यातायात प्रभूत, जनसम्मर्दश्च महान् समभूत । लोकास्तत्रागत्य सर्व परिपश्यन्तो मादमाना आसन् । लक्ष्मीचन्द्र स्वयमपि तदुद्यममेत, देय भवन, सकलान् पदार्थाश्च लोकेभ्य प्रदर्शयन् मनोवाचामगोचरा कामपि मुदमनुभवन् स्वजीवनस्य कृतार्थतामिव मेने । तत्र भवने यज्ञाहुतिधूम्रैः पवित्रीकृत वायुमण्डल सम्पेदे । सुगन्धभरनिर्भरेण तत्रत्येन वातावरणेन समागताना सभ्याना घ्राणतर्पणमयत्नसुलभ जायमानमभूत् । महिलागीतनृत्यादिभिर्मङ्गलध्वनिमातेनु । वादित्राणा घोषैदिङ्मण्डलम् मुखरितमिवासीत् । ब्राह्मणैर्मन्त्रोच्चारा विहिता । भोजनादिक सम्पन्नम् । पूर्णाहुति सम्पेदे ।

सप्ताहपर्यन्तमविरतमविश्रान्तमजस्रमहर्निश तदेतत्सर्वं धार्मिक कृत्य सम्पादयन्नारायणशर्मा स्वात्मानं किञ्चिदिवातिश्रान्त मत्वा क्षण पुन स्वस्थतामापादयितुं शौचस्नानादिका क्रिया निर्वर्तितुं मध्यान्तरमासाद्य नगरोपसीम्नि वर्तमान जलाशय जगाम । अतिमात्र श्रान्तस्य क्लिष्टस्य तस्य देहावयवा पीडचमाना अभूवन् । सत्यप्येव स पुरत कार्यगौरवान्नितरा शिथिलता गतोऽपि शनै शनैर्जलाशयतो निवर्तमानो नगराभिमुख व्रजन्त पन्थानमतिक्राम्यन् पुनर्लक्ष्मीचन्द्रस्य यजमानस्य गृह प्रतिगच्छन्नभून ।

इता लक्ष्मीचन्द्रस्य गृहे सर्वेऽपि सामाजिका सम्मिलिता नारायणशर्मण पुनरागमन प्रतीक्षमाणा सोत्कण्ठाश्चासन् । स्वय लक्ष्मीचन्द्रोऽपि च वार वार पुरोधस त सस्मार । नारायणशर्मणं कौटुम्बिकास्तमियन्त काल यावदनागत ज्ञात्वा तद्दिशि कृतेक्षणा मनसीषदुद्विग्ना इव पर्यलक्ष्यन्त । सर्वेऽपि तत्रोपस्थिता वैष्णवा सज्जना मिथो नारायणशर्मणो विषये स्वजिज्ञासाभाव पप्रच्छु । ज्ञातयो नागरिका आमन्त्रिता केचन जना 'क्व गतो नारायणशर्मा?', किमर्थं विलम्बते स ?' इत्यादिकं भूयो भूयो व्याजह्रु । क्षणादेव नारायणशर्मणोऽनुपस्थितिविषयिणी चर्चा तत्र कर्णाकर्णि स्वत एव प्रससार । एतत्सर्वमालोक्य लक्ष्मीचन्द्रोऽन्तमनसि मनाग्विमनायित । मुहुर्मुहुर्लोकै पृष्ठ क्षणात् खेदखिन्नो जात । प्रतीक्षाभावस्तावत्तत्र तादृग्विचकाशे, यत्तत्रोपस्थिताना सर्वेषा सामाजिकाना मनो नारायणपुरोहितस्यानुपस्थिति सोढुमसमर्थं इव मनोविज्ञानविदा मते बभूव । तावदेव नारायणशर्मा नगरवीथ्या तद्भवनाभिमुखमागच्छन्नवालोक्यन सर्वै ।

श्लथदेह परिश्रमशिथिलो मन्दज्वराक्रान्तो वेपमानाङ्गयष्टिर्दीन खिन्न इव सखेदो नारायणशर्मा महता कष्टेन सयमितात्मवृत्तिर्यावत्तद्भवन प्रविशति, यावत् स द्वारदेशमुपतिष्ठते, यावत् स आत्मान व्यवस्थित कुरुते, तावदेवानैकर्जनैः —'क्व गता अभवन्महाभागा ? अये ! अतिविलम्बित महाराजेन ! भो ! सर्वेऽपि सामाजिका भवन्तमेव प्रतीक्षमाणा सन्ति पण्डितवर्य ! अये ! समाजगामासौ पुरोधा ! आगम्यताम्, आगम्यताम्, महाभाग ! त्वरताम्, त्वरताम् भो पुरोहितवय ! अतिक्राम्यत्यसौ मु-

हूर्त वेला ! ! अरे, भूदेवा इमे नावसरमहत्त्वं परिचिन्वन्ति ! ! अभी पण्डितर्षभास्तु प्राय. स्तब्धा एव भवन्ति भोः ! एते तु वैदिकयुगीनं, पौराणकालीनमेव सर्वं सामाजिक व्यवहारवर्तनमाकलयन्ति! !' इत्येव विधानि नानाक्षेपवचनानि शृण्वानो नारायणशर्मा महता कृच्छ्रेण द्वारं प्रविश्य प्राङ्गणमध्यासीनानां सामाजिकाना समीपमागत्य स्वासने निषसाद । यावत् सः स्वस्थो भूत्वा किमपि वदेत्ततः लक्ष्मीचन्द्रो वणिग् यजमान ऊचे:—

'क्व गतोऽभून्महाभाग? भवन्त प्रतीक्षमाणा वय सर्वे भृश विलम्बिता !'

नारायणशर्मा कथमपि व्यवस्थापितस्वमनोवृत्तिरुवाच—'आम्, उपस्थितोऽस्मि, सर्वमवशिष्ट कार्यजात सम्पाद्यतेऽधुना निश्चिन्ता भवत ।'

लक्ष्मीचन्द्रः—'भवता ब्राह्मणाना बतासौ दीर्घसूत्रता नाम दोषो महान् परम्परागतो विजृम्भते । अवसरानभिज्ञा भवन्तो द्विजपुङ्गवा. । तत एव सेय निर्धनता बाधते भवत: ।'

नारायणशर्मा—'नि.स्पृहा भवन्ति ब्राह्मणा· श्रेष्ठिन् ! पुनस्ते विद्वासः । सुमुहूर्त, कुमुहूर्त, सुयोगं, कुयोग, कालातिक्रमण वा स्वयमेव हि सुष्ठु जानते ।'

लक्ष्मीचन्द्र —परमेतत्त भवता ज्ञातव्यमेवोचितम् यदय नत्वभूतपूर्वोऽवसरो भवद्विधैरेव महद्भि· प्रयत्नैरायोजित इति । नैतादृशं खलु विराडायोजन यजमानेषु भवत कृतपूर्व श्रुतपूर्व, दृष्टपूर्वं वा स्यात् । ततो भवता समयानुवर्तने यजमानानामस्माकमनुरोधो नैवोल्लङ्घनीयः ।' नारायणशर्मा—'स्यात् कदाचित्तवोक्तमेतत् सर्वमुचितम्, परन्तु श्रीमद्भिर्यजमानैरपि सर्वजनसमक्षमित्थं ब्राह्मणा न धर्षणीया, न च ते विप्रकर्तव्याः, पुरोहितास्तु विशेषतः प्रसङ्गेषु माङ्गलिकेष्वेवं विशेषु नैवावगणनीयाः । पुनर्वित्तशाठ्यं तु तावत् सर्वैरपि सर्वदा वर्जनीयमेव ।'

लक्ष्मीचन्द्रः—'हहो, भूदेव! किमेवेहात्र शुभे प्रसङ्गे यजमानाना समाजे त्वमात्मन स्वयसिद्धता प्रख्यापयन्नावबुद्धयसि यथार्थतामवसरस्य ! ! अतः पूर्वमेवंविधं प्रभूतसम्पत्सम्पन्नं महादानं तव पूर्वजैस्त्वयापि च नैव समुपलब्ध स्यात् !'

नारायणशर्मा—'धिक् त्वां मूर्ख ! शठ ! अधम ? वित्तशाठ्यमेतत्ते । नान्यत् किमपि । धनगर्वात् त्वमेव विकत्थसे । हुम् ! शृणुष्व रे मदान्ध ! त्वयापि, न हि, न हि, तव पूर्वजैरपि च नैवंविधो मत्सदृशो ब्राह्मणोऽवलोकित. स्यात् । अह हि तवैतद्गृहदानं, तवाखिला सम्पदं, त्वाञ्च वत तृणाय मन्ये ! नाहमेतत्ते भवनदानं प्रतिगृहीतु वाञ्छामि ! यो हि तव सदृशो भवेद्ब्राह्मणाधमो, महाब्राह्मणो, ब्रह्मबन्धुर्वा, तस्मा एव प्रदीयतामेतत्तामस महादानम् ! धिग् धिग् त्वा मूर्ख, शठ, वैश्यापसदम् !

एवं कथयन् परुषाणि विषोल्वणानि मर्मच्छिदानि वचनानि क्रोधाग्निज्वालाजटिलो दुर्वासा इवापरो ज्वलन्नेत्र· प्रकम्पमानसर्वाङ्गो भृकुटिभीषणंरौद्र रूपमात्मनोऽतीव विकरालमाविष्कुर्वन् नानादुर्वचनैररुन्तुदैस्तं वणिज शपन् स नारायणशर्मा सहसोत्थाय सर्वेषां सामाजिकाना 'भूदेव ! क्षमस्व! क्षमस्व ! इति ब्रुवतामपि सर्वांस्तत्प्रसादनोपायांस्तिरस्कुर्वाणो गृहात्तस्मार्द्धूरव इव वेगाद् बहिर्निर्जगाम । तत आरभ्याद्यावधि स नारायणशर्मा पुरोहित. क्व नु कुत्र वा गतो वा मृतो वा रसातले विलीनो वान्तरिक्षे प्रोड्डीयान्तर्हितो वाथवा लोकान्तरे निलीनोवेति तस्यास्तित्वस्यान्ततः किमभूदिति तत्त्वतो न कोऽपीदमित्थं जानाति वक्ति वा तत्गतमित्यहो स्वाभिमानः ।

——:०:०:——

[ जुलाई-अगस्त ६७ से आगे ]

# श्रीचैतन्यनीतिशतकम्

'श्री चैतन्य'

ईश्वराराधनेनैव,
न कोऽपि धार्मिको भवेत् ।
सदाचारेण सम्पूर्णो,
नूनं भक्तश्च धार्मिक· ।।८६।।

सदाचारो महाधर्म·,
सर्वत्र सर्वदा स्मृतः ।
सदाचारविहीनस्तु,
पापात्मा कथ्यते बुधै ।।८७।।

दृश्यन्ते धार्मिका लोके,
प्रभुभक्तो न दृश्यते ।
योगीश्वरस्य सद् भक्तो,
न दृश्येत कदाचन ।।८८।।

वीतरागभयो योगी,
विमुक्तो भवबन्धनात् ।
ब्रह्मध्याने सदा लीन,
सुगुप्तो ब्रह्मवद् भवेत् ।।८९।।

अन्धकारावृते कूपे,
पतिताः पापिनो जनाः ।
प्रकाश जपमात्रेण,
न लभन्ते कदाचन ।।९०।।

रागग्राहगृहीतस्तु,
पतित पापसागरे ।
न प्रभोर्जपनेनैव,
केवलं स विमुच्यते ।।९१।।

ईश्वराराधनेनैव,
विमूढो लुब्धको जन ।
यतते पापनाशाय,
ईश्वरं वञ्चयन्निव ।।९२।।

ईश्वरं न्यायकर्त्तारं,
जपनेनैव केवलम् ।
तुष्टीकत्तु हि वाञ्छन्ति,
प्रायशो बहुधा जना· ।।९३।।

कर्मकाण्डे सुलग्नोऽपि,
निजदोष न पश्यति ।
भगवद्भजनेनैव,
नासौ दुःखैर्विमुच्यते ।।९४।।

रागद्वेषादिक हत्वा,
विमुक्त पापकर्मतः ।
सदाचारेण सयुक्त,
ईश्वराराधको भवेत ।।९५।।

पापात्मा दुर्मतिश्चव,
हिंसको धनलोलुप ।
कामीक्रोधी त्यजेन्नून,
ईश्वराराधनं वृथा ।।९६।।

ब्रह्म प्राप्तिस्तु योगेन,
धर्मेण लोकवर्त्तनम् ।
स्वरक्षां नीतिमाश्रित्य,
मानव कर्त्तुमर्हति ।।९७।।

पापकर्माणि कुर्वन्तं,
सद्गुणैर्वर्जित नरम् ।
ईश्वरो न्यायकारी किं,
पापमुक्त करिष्यति ।।९८।।

सत्कामकर्मयोगोऽयं,
पन्था दु खहर· स्मृत ।
शुभकर्मपथं त्यक्त्वा,
नान्यो मार्गस्तु दु.खहा ।।९९।।

शुभेन कर्मणा युक्तो
विमुक्त पापकर्मणा ।
कर्मयोगी तरेन्नून,
भवसिन्धु न सशय ॥१००॥

शुभकर्म सदाधर्म,
अशुभ पापमेव हि ।
शुभकर्माणि कुर्वन्तो,
मुच्यन्ते भवबन्धनात् ॥१०१॥

शुभकर्मोडुपो यन,
विस्तीण भवसागरम् ।
नर तर्त्तु हि शक्नोति,
कर्त्तव्यो नात्र सशय ॥१०२॥

योगाभ्यास विना कश्चिद
ईश्वर नाधिगच्छति
ईश्वरप्राप्तिकामस्तु,
योगाभ्यास समाचरेत् ॥१०३॥

योगविद्या समाश्रित्य
महान्त ऋषयो जना ।
ईश्वरमधिगच्छन्ति,
एकत्व प्रति सयुता ॥१०४॥

सदगुरु योगिन गच्छेद्,
योगार्थी साधको जन ।
गुरुद्वाराश्रितोनित्य
योगाभ्यास समाचरेत् ॥१०५॥

योगाभ्यासी जनो नित्य,
चित्तवृत्ति निरोधयेत् ।
चित्तवृत्तिनिरोधस्तु
योगाधार स्मृतो बुधै ॥१०६॥

ज्ञानाग्नि ज्वालयेन्नित्य,
चित्तवृत्तिनिरोधक ।
सर्वाणि पापकृत्यानि,
भस्मयेत् ज्ञानवन्हिना ॥१०७॥

अष्टाङ्गयोगयुक्तत्व,
ब्रह्मप्राप्तिपथ स्मृत ।
योगविद्याविहीनस्तु,
ईश्वर नाधिगच्छति ॥१०८॥

यमश्च नियमश्चैव,
तृतीयमासन तथा ।
प्राणायामश्चतुर्थोऽय
सुमार्गो योगगामिनाम् ॥१०९॥

प्रत्याहारोऽथ विज्ञेय,
षष्ठीय धारणा स्मृता ।
सप्तम ध्यानमित्याहु
समाधिरष्टम स्मृत ।११०॥

साधको हि समाधिस्थो
ब्रह्मानन्द विलक्षणम ।
ब्रह्-सदर्शन चैव,
प्राप्नोतीति ह श्रूयते ॥१११॥

न कदाचित क्वचित कोऽपि,
योग कुर्याद् गुरु विना ।
योगाभ्यासो ह्यशुद्धस्तु
घातक कथ्यते बुधै ॥११२॥

अहिसा सत्यमस्तेय,
ब्रह्मचर्यापरिग्रहा ।
यमनामसुविख्याता
पञ्चकाश्चित्तशोधका ॥११३॥

सन्तोष शुचिता चैव,
तपस्स्वाध्याय एव च ।
ईश्वरप्राणिधानञ्च
पञ्चधा नियम स्मृत ॥११४॥

धृतिधर्म क्षमाधर्म,
इन्द्रियाणा दमस्तथा ।
दान विद्या तपश्चैव,
सद्गुणा धर्मलक्षणम ॥११५॥

शिखासूत्रादिक चिन्हं,
धर्मलिङ्गं प्रकीर्तितम् ।
धर्मलिङ्गावृतः कश्चिद्,
दुष्टो न धार्मिको भवेत्॥११६॥

सन्ध्या पूजाऽथवायज्ञः,
कर्मकाण्ड तथैव च ।
सर्वाणि धर्मलिङ्गानि,
जानन्ति क्रान्तदर्शिनः ॥११७॥

धर्मलिङ्गं व वै धर्मः,
सुस्पष्ट कथ्यतेऽधुना ।
द्वयोरप्येतयोर्भेदो,
मनुना सम्प्रकीर्तितः ॥११८॥

चौराय वञ्चकायैव,
हिसकाय खलाय च ।
कामातुराय दुष्टाय,
दण्डनीतिं समाश्रयेत् ॥११९॥

दण्डनीति विना दुष्टो,
न प्राप्नोति सुपात्रताम् ।
दण्डनीतिभयात् पापी,
पापान्नूनं निरुध्यते ॥१२०॥

येन केनाप्युपायेन,
सर्वदा स्वार्थसाधकः ।
क्रोधी लोभी च कामी च,
हिंसकः खल उच्यते ॥१२१॥

छिद्रान्वेषी भवेद्दुष्टो,
ईर्ष्यालु मंत्सरो जनः ।
परनिन्दाप्रियो नित्यं,
द्वेषबुद्धिः स्वभावतः ॥१२२॥

कूटनीतिं समाश्रित्य,
हिंसकाः क्रूरचेतसः ।
पीडयन्ति सदा विश्वं,
नानाविधप्रवञ्चनैः ॥१२३॥

साधुरूपं समाश्रित्य,
प्रायशो वञ्चको जनः ।
निज विश्वासमुत्पाद्य,
मर्खान् वञ्चयते सदा ॥१२४॥

खलो मित्रत्वमापन्नः,
भेदं वेत्ति शनैः शनैः ।
दशति प्राप्तकाले तु,
दुरात्मा कृष्णसर्पवत् ॥१२५॥

सघशक्ति खल शीघ्र,
करोति युद्धकाम्यया ।
असहाय रिपुं वीक्ष्य,
हिंसाक्रान्त चिकीर्षति ॥१२६॥

विश्वासं मूर्खतामूलं,
यो जानाति सर्वथा ।
न पराभवमाप्नोति,
वञ्चकैः स कदाचन ॥१२७॥

विद्याबुद्धिसुसम्पन्नः,
स्वस्थो बलयुतोऽपि च ।
धनिकोऽपि खलान्नूनं,
नीतिहीनो विनश्यति ॥१२८॥

न कदाचित् प्रयुञ्जीत,
नीतिं स्वार्थस्य साधने ।
आत्मरक्षां समुद्दिश्य,
नीतिविद्यां समाश्रयेत् ॥१२९॥

देशकालौ समालोक्य,
नीतिनिर्धारको भवेत् ।
परिवर्तिनि संसारे,
यथायोग्य समाचरेत् ॥१३०॥

कुटिला कूटनीतिः सा,
कालकूट हलाहलम् ।
कथ्यते किल नीतिज्ञैः,
भुजङ्गी कालरूपिणी ॥१३१॥

क्षणे क्रूराः क्षणे शान्ताः,
स्पष्टा गुप्ताः क्षणे क्षणे ।
क्षणे तु सरला वक्रा,
गहना नीतिमार्गणाः ॥१३२॥

सद्युक्तया तु प्रयुक्ता वै,
शत्रुघातकरी मता ।
अविचार्य प्रयुक्ता तु,
ह्यात्मनाशकनी भवेत् ॥१३३॥

अविवेकी वृथा गर्वी,
मूढग्राही भयातुरः ।
कूटनीतिप्रयोगाय,
नोपयुक्तस्तु मन्यते ॥१३४॥

बुद्धिमान् दूरदर्शी च,
विवेकी निर्भयो नरः ।
देशकालानुगामी च,
विज्ञेयो नीतिपण्डितः ॥१३५॥

नीतिज्ञश्चाथ शूरश्च,
प्राप्तकालज्ञ एव च ।
न पराभवमाप्नोति,
कदाचित् केनचित् क्वचित् ॥१३६॥

साधनवित्तहीनोऽपि,
नीतिज्ञो नरपुंगवः ।
साधयत्याशु कार्याणि,
विपश्चिद् देशकालवित् ॥१३७॥

एक एव हि नीतिज्ञो,
बलबुद्धिसमन्वितः ।
अनीतिज्ञान्नरान्सर्वान्,
पराभूतान् करिष्यति ॥१३८॥

श्रीमता रामचन्द्रेण,
सर्वं राक्षसमण्डलम् ।
पातितं नीतिसंतापे,
भस्मीभूतं पतङ्गवत् ॥१३९॥

श्रीमता कृष्णचन्द्रेण,
निशस्त्रेणैव धीमता ।
कूटनीतिप्रयोगेण,
कुरवो नाशिताः खलाः ॥१४०॥

भीष्मं द्रोणं च कर्णं च,
दुर्योधनं तथैव च ।
हतवान्नीतिचक्रेण,
चक्रपाणिर्जनार्दनः ॥१४१॥

भीष्माग्रे त्वर्जुनं मूढं,
दृष्ट्वा व्यामोहितं परम् ।
महता कृष्णचन्द्रेण,
स्व प्रतिज्ञाऽपि विस्मृता ॥१४२॥

विदुषा विष्णुगुप्तेन,
चाणक्येन महात्मना ।
नन्दस्योन्मूलनं कृत्वा,
धर्मराज्यं प्रतिष्ठितम् ॥१४३॥

शिवाजी नाम विख्यातो,
महाराष्ट्रस्य केसरी ।
यवनानां कलिर्भूतो,
नीतिविद्याविशारदः ॥१४४॥

अहिंसानीतिमाश्रित्य,
गांधीनाममहात्मना ।
सर्वसाधनसम्पन्नं,
गोराराज्य पराजितम् ॥१४५॥

अणुशक्तिसुसम्पन्नं,
आत्मघाते रतं जगद् ।
विश्वश्रद्धास्पदं रक्षे,-
च्छान्तिमन्त्रेण भारतम् ॥१४६॥

सज्जना नैव सर्वत्र,
दृश्यन्ते कृमिकीटवत् ॥
पृथिव्याः पापनाशाय,
सम्भवन्ति यदा कदा ॥१४७॥

मध्यमैश्चाधमैं पुंभिः
सर्वं व्याप्तमिदं जगत् ।
निःशक्तिभक्षकं नित्य,
मात्स्यन्यायेन संयुतम् ॥१४८॥

सज्जनं प्राप्य सामान्यो,
नरो याति सुपात्रताम् ।
दुर्जनं पुरुषं प्राप्य,
सामान्यो दुर्जनो भवेत् ॥१४९॥

त्यजेद् दुर्जनससर्गं,
पापिनं क्रूर वादिनम् ।
मिथ्याचारेण सयुक्तं,
यदीच्छेदात्मनः शुभम् ॥१५०॥

भ्रष्टाचारयुतान् सर्वान्,
मिथ्यागर्वेण पूरितान् ।
त्यजेद् दुष्टान् नरान् सर्वान्,
यदीच्छेच्छ्रियमात्मन ॥१५१॥

कामी क्रोधी च लोभी च,
स्वार्थी हिंसापरायणः ।
कुतर्की कटुभाषी च,
त्याज्यो भवति दुर्जन ॥१५२॥

अपशब्दाभिलाषी च,
वृथा विग्रहकारक ।
कुकर्मी व्यसनी चैव,
त्याज्यो भवति दुर्जनः ॥१५३॥

दूषयन्नपशब्देन,
सज्जनं सभ्यगोष्ठिगम् ।
आत्मानं विजित मत्वा,
श्वतुल्यं बुक्कते खलः ॥१५४॥

न खलेन सम प्रीतिं,
द्वेषं चैव न कारयेत् ।
रागद्वेषं खलानान्तु,
घातकं कथितं बुधै ॥१५५॥

दुर्जनेन समं प्रीतिः,
कुर्यान्नैव कदाचन ।
सर्पवृश्चिकवत् प्रीति,
दुर्जनस्य मता बुधैं ॥१५६॥

मित्रत्वेऽपि भयोत्पत्ति-,
र्जायते दुर्जनस्य तु ।
शत्रुत्वेऽपि भय भूयो,
दुर्जनो भयकारणम् ॥१५७॥

दुर्जन दूरतस्त्याज्य,
कथित नयपण्डितैः ।
शृङ्ग पुच्छविहीनोऽप्य,
घातको वृषभो मत ॥१५८॥

आगत दुर्जनं दृष्ट्वा,
दूरतो याति सज्जन ।
पापदुर्गन्धयुक्तस्तु,
त्याज्यो भवति दुर्जन ॥१५९॥

आगतं दुर्जनं वीक्ष्य,
नैव कुर्यात् पलायनम् ।
मौनभाव समाश्रित्य,
दुर्जन परितोषयेत् ॥१६०॥

तोषयेदल्पदानेन,
नीच निर्धनकं खलम् ।
अल्पदानेन सन्तुष्टो,
नीचस्त्यजति दुष्टताम् ॥१६१॥

बहवो बलिनो दुष्टा,
बलगर्वेण गर्विता ।
तुष्यन्ति प्रणिपातेन,
ज्ञेयं तत्त्वं मनीषिभिः ॥१६२॥

अर्थस्य लोलुप पापी,
वित्तेनैव हि तुष्यति ।
अर्थार्थी प्राणिपातेन,
न तुष्यति कदाचन ॥१६३॥

(क्रमशः)

(जुलाई-अगस्त ६७ से आगे)

# मम संस्कृतोत्कर्षवृत्तान्तः

(ले० श्री विश्वनाथ केशव छत्रे, जोगेलकरवाडा, सिद्धेश्वर आल, कल्याण (जि० ठाणे)

८ 'नदिनीवरप्रदान' समश्लोकसमवृत्तानुवाद विरचित

नित्य भास्वद्गुणलवमपि प्रेक्षमाणा परेषा
त स्तुन्वन्त सकुतुकगिरा स्वातरे मोदमाना ।
मार्गं तेभ्योऽभ्युदयशिखरप्राप्तये दर्शयतो
धन्या नून भुवि सुविरलास्ते महोदारसत्त्वा ।।२।।

तत मया रघुवश अधीत स्वयमेव अधिकाधिक यावान् उपलब्ध भाषातरटिप्पणीसहित । मराठीकाव्यरचनाया चिराभ्यासेन द्वितीयसर्गस्य समश्लोक-समवृत्तानुवाद विरचित मया स्वान्त-सुखाय । स सादर अवलोकित मूलकाव्येन सह गु० श्री० रा० पा किजवडेकरशास्त्रिभि ततश्च डा श्री के ना वाटवेमहाभागै । एतयो विदुषो सौजन्य, रसिकत्व, निरहकारवृत्ति परोत्कर्षाय यावच्छक्यसाहाय्यप्रदानोत्साहश्च मम सस्कृतोत्कर्षस्य मूलकारणम् इति मन्ये, प्रकटयामि च तत् कृतज्ञताभावेन प्रत्येकप्रसगे सभाषणानुरोधेन । घनाधकारे दीपप्रकाश इव अय मधुर अनुभव मधुरतर प्रतीत अग्रे वर्णितस्य विपरीतानुभवस्य सस्मरणेन ।

९ पडितवरात् उत्साहभग

नोज्झ्यते चेद् धनासक्तियौवनाते च सर्पदि ।
सभ्यताप्यतिथौ नाप्ता पाडित्येनोत्तमेन किम् ।।३।।

कमपि ख्यातनामपडित द्रष्टु तस्माच्च उपरिनिर्दिष्टानुवादविषये अभिप्रायम् अवाप्तु तस्य निवासम् अगच्छम् । दिष्टचा स दृष्ट मया वातायनात्, आसीन काष्ठासने व्यग्रश्च स्वकार्ये। अनावृतद्वारात् प्रविश्य, पडितमहाशय प्रणम्य न्यवेदय ममागमनकारणम् । तच्छ्रुतमात्र स कोपाविष्ट भूत्वोवाच । 'यदि अनुवाद कृत तर्हि मुद्राप्यताम् । किमर्थ पीड्यते अय जन । कि न ज्ञायते मम व्यवसायव्यापृतत्वम्' । भग्नमनोरथ एव अकल्पितरीत्या नष्टोत्साहश्च 'क्षम्यताम्' इति उक्त्वा सद्य तत निर्गत्य, राजमार्गस्य पदपथकोणम आश्रित्य मुहूर्तम अचितयम्, 'श्रीमान् वृद्धोऽपि स पडितवर धनलोलुप असतुष्टश्च मादृशस्य उत्कर्षेच्छुकस्य साहाय्यदाने अनुत्सुकोऽपि केवलशिष्टाचारार्थ किमर्थं निमेषपचक ममानुवाद नाव लोकितवान् वा अग्रिमा दर्शनवेला विज्ञापितवान् । किमीदृशस्य असौजन्यस्य कारणम् । 'स्वभावो दुरतिक्रम' इति आत्मान समाधाय गृह निवृत्तोऽहम् । विशतिवर्षानतर स एव पडित विस्मृतपूर्वाचरितावमान सादर व्यलोकयत् मे 'सुभाषचरितम मया दृष्ट विनैव पूर्वसकेतम् ।

१० स्वतत्रकवितारचनाप्रारभ

अत्रातरे दैनदिनविद्युद्रथप्रवासे (कल्याण-मोहमयीमध्ये) लभ्यमान होराद्वयस्य अवसर सद्विषयचितने सस्कृतकाव्यरचनाप्रयत्ने च यापयितु मया उपक्रातम् । ततश्च 'हर्षक्षणा' नाम्नी कविता आविरासीत् । सा सस्कृत-मराठी-आग्लभाषासु विरचिता । पर सस्कृतबद्धा मे प्रियतमा । तस्याम्—

गच्छन् कदाचित् पथि पारिजात-
प्रफुल्लपुष्पोत्कटसौरभेण ।
विमोहितश्चंकमपि प्रयातु,
पदं न शक्नोमि पुरः प्ररुद्धः ।।

अथ श्लोकस्तु चायपानं कुर्वतः एव मम मनसि प्रादुर्भूतः विना लवमात्ररचनायासम् । पूर्वं पठितः यथा लिख्यते तथैव मया लिखितः सः कार्गजे । एषा कविता 'भवितव्यम्'-पत्रे २०-९-१९५२ दिनांके प्रकाशिता प्रथमा एव मम प्रकाशितसंस्कृत-साहित्ये । तेन पत्रेण च लेखकसमानत्वेन श्री० का० द० समुद्रमहाशयानां सख्यं मया सह साधितम् ।

## ११ लघुकाव्यरचनाप्रयत्नः

एकस्मिन् शनिवासरे अपराह्णे. कार्ये विरामं गते, कार्यालयात् १४-३५ वादनसमये बोरी-बंदरस्थानकात् प्रतिष्ठमानेन स्थानिकविद्युद्रथेन (Local train) प्रवासिसंमर्दे पद्भ्यां तिष्ठता कल्याणं प्रति च प्रवसता मया मनसि चिंतितम् । "मराठीभाषायां विपुला काव्यरचना मत्तः निर्मिता । किमर्थं देवभाषायां मया न प्रयतितव्यं लघुकाव्य-रचनाविषये । कविकुलगुरुणा जगद्वंद्यः रघुवंशादिः काव्यसागरः विरचितः । एतस्मिन् लब्धेऽवसरे प्रयतिष्ये कतिपयश्लोकरचनार्थं कालिदासम् अनु-कृत्य, चित्तैकाग्रतया च विलुप्तदेहभावः विस्म-रामि प्रवसनक्लेशान् । काव्यविषयोऽपि सत्वरं स्मृतिपथम् आगतः निश्चितश्च—मालाडग्रामे कै० साधुवर्यकेतकरप्रवचने श्रुता, मनसि बद्धमूला च मीरादेवी-रजकयोः कथा । श्रीशारदायाः महत्येव कृपा यद् यावत् कल्याणस्थानम् आगतम् तावत् पंचषश्लोकानां संतोषावहा रचना समपद्यतापि । ततः श्लोकद्वयम् उद्ध्रियते आदिमम् ।

"श्रीकृष्णभक्ताऽवनिपालकन्या,
मीरेकदा मुक्तकचा गवाक्षे ।
दृष्टा निषण्णा रजकात्मजेन,
रूपेण सोऽतीव विमोहितोऽभूत् ।।

'भार्या भवेत्सा यदि मे,' स्वचित्ते,
स आह 'देवेंद्रपदेऽपि नेच्छा ।
लग्ने च तत्रैव तदीयचित्ते,
कृताः प्रमादाः बहव स्वकार्ये ।।"

## १२ अरसिकात् काव्यप्रथमार्ध विनष्टः । दुर्दम्येच्छा प्रहरति पदात्युग्रमप्यंतरायम् ।

एवं द्वादशश्लोकान् विरच्य कस्मै अपि विदुषे मया ते दत्ताः अवलोकनार्थम् । परं यावत् उत्तरा-र्धरचनां समाप्य, तस्मात् विदुष पूर्वार्धः मया अर्थितः, तावत् सः विस्मृतविनष्टप्रायः इति प्रतीत । वराक सः विद्वान् अपि नाधृष्णोत् प्रकटयितुं स्वीयाम् अरसिकतां शिष्टाचारपालनार्थम् । परं तेन कियंतः मम परिश्रमाः खलु विफलीभूताः । 'सुखदुःखे समे कृत्वा' मया सः पूर्वार्धः भूयः विरचितः परिश्रमपूर्वकम् । एतत् काव्यं 'सत्संग-प्रभाव' इति नाम्ना 'एकता'-मासिके मार्गशीर्ष शके १८७४ अंके प्रकाशन लेभे । तदानींतनपद्धत्य-नुसारं मम नाम तत्र अनिर्दिष्टमपि अतुष्यम् 'बधिरात् मंदकर्ण. श्रेयान्' इति न्यायेन ।

१३ संस्कृतकाव्यग्रंथसमीक्षणम्

अथ कल्याणवासिनः राजेनामविधिज्ञस्य अपधातोद्भूतनिधनस्य वार्तां वृत्तपत्रे पठता मया सविषादं ज्ञातं यत् सः संस्कृतानुरागी आसीत्, मनोविनोदनार्थं च समयानुसारं तेन विरचितानां संस्कृतकवितानां 'मनोविनोदराज.' नाम संग्रहः प्रकाशितः वर्तते इति। सत्वर ग्रंथालयात् तं संपाद्य समग्र. मया सानंदं पठितः। तत्र संस्कृतकाव्यसाहित्यशास्त्रविषय आंग्लभाषानिबद्धा विस्तृतप्रस्तावना, आधुनिकविषयाणाम्, उदा० कल्याणनगरस्थाः मशका., जलमिश्रितं दुग्धं, वातोद्धूतधूलिकणैः भारे वर्धमानानि आपणमोदकानि, जलनलिकोपरि दृश्यमानाः नारीणां कलहाः, सुगंधिपिष्टहिमावलिप्ताननाः यौवनभरोल्लसिताः ललनाः, चक्रिकाम् आरुह्य नगरवीथिषु भ्रमन्त्यः युवतयः इत्यादीनां विडबनं, इतीदृशं काव्यात्मकं वर्णनं, मराठीभाषांतरम् आंग्लीसंस्कृतटिप्पणीश्च इत्येतैः समन्वितं विलोक्य प्रीतेन मया तस्य रसग्रहणपरः लेखः महाराष्ट्रभाषायां प्रयत्नपूर्वकं लिखित· प्रसिद्धिं च सः सादरं लब्धवान् सह्याद्रि मासिके मे १९५३ अंके। तेन आकृष्टाः रसिकवाचकाः पत्रद्वारा संपादकद्वारा कुत्र तत् पुस्तकं विक्रीयते इति। एवं एषा संस्कृतकाव्यग्रंथसमीक्षणयशस्विता मम नूनं भूरि प्रोत्साहनपरा बभूव।

१४ प्रा० श्री० वर्णेकराणां सत्संगः

१९५२ ख्रिस्ताब्दस्य अंते निरीक्षणकार्यं (Inspection) अंगीकृतस्य मम द्विवारं सवृत्तः नागपुरे दीर्घनिवासः। प्रा. श्री. वर्णेकराणां दृढपरिचयेन संस्कृतप्रगतये महान् उपकारी अभवत्। 'भवितव्यं' पत्रस्य ग्राहकत्वं सद्यः स्वीकृत्य तस्य सादरनियतपठनात् सुबोधसंस्कृतभाषायां नूतनविचारा कथं प्रकटयितव्या इति सुष्ठु मया अवगतम्। वर्षान्ते मातृभाषावृत्तपत्रमिव 'भवितव्यम्' विनायास पठितुं संस्कृतभाषायां च पत्रं सुखेन लिखितु समर्थ. अभवम्।

१५ लो. अणेकृता अनुवादकौशलप्रशस्तिः

अथ लोकनायक श्री० अणे-विरचितं 'विजयनाम संवत्सरपंचकम्' १९५३ ख्रिस्ताब्दे केसरिपत्रे पठित्वा प्रीतेन मया सपदि तस्य महाराष्ट्रभाषानिबद्धोऽनुवाद विरचितः प्रेषितश्च कवि प्रति-तदा बिहारराज्यपालम्। सत्वरं तेन प्रहितः एवं स्वाभिप्राय. मम अतीव उत्साहप्रद बभूव।

(अनूदित· मराठीत:)

"श्रीमर्द्भिः विरचित. अनुवादः नूनं शोभनः संवृत्त., मह्यं च सः भृशम् अरोचत। मूलार्थं स्तोकमात्रमपि अविदूष्य स कृतः विनायासम् इति प्रतीयते। केषुचित् स्थलेषु तु मूलापेक्षयापि स. सुरसतरः इति अनुभूयते'।

अनुवादकौशल्यप्रशस्तिः इतः किमधिका इष्येत।

१६ मनोबोधचिंतनम् संस्कृते अनुवादयत्नश्च

अस्यैव वर्षस्यांते करालकालपाशोपमेन क्षयरोगेण मम शरीरं सहसा आसाद्य अहं कार्यविरामं हठात् ग्राहितः वर्षपरिमितस्य। तदोपलब्धेषु औषधोपचारेषु क्रियमाणेषु तद्रोगस्य दुःसाध्यत्वं विज्ञाय, कृतांतस्य स्वागताय सतोषेण सिद्धीभूय मया साधुरामदास-विरचितस्य 'मनोबोध'स्य चिंतन प्रारब्धं श्लोकशः, संस्कृतानुवादकरणं च समश्लोके समवृत्ते च। तेन सुविचारे मन्मन. न केवलं अरमत, परं मे दैहिकयातनाः अपि सुसहाः अभवन्, कालयापनं च अकष्टप्रदं संवृत्तम्। हितोपदेशस्य अनुवादः अपि मया प्रारब्धः मराठीभाषायां, गद्यस्य गद्ये पद्यस्य च पद्ये एव। ईदृशश्च

अनुवादः न दृष्टपूर्व. वा श्रुतपूर्वः इति विद्वद्वरेभ्यः ज्ञात्वा तु उत्साह मे विवृद्धः अस्मिन् कार्ये । इद सर्व शक्यमभूत् रोगप्रभावस्य ऊनाधिक्ययो. नित्य-परिवर्तनेन ।

१७ कै. पाध्ये शास्त्रिणः मयि आकृष्टाः

सः मनोबोधानुवादः मया समग्रः कृत, अधो-लिखितेन श्लोकमात्रेण च आकृष्टा कै गुंजरपाध्ये-शास्त्रिणः, सद्य मयि सौहार्द बबधुः ।

"समर्थस्य दासे सकृद्वक्र दृष्टि
क्षिपेद् भूतलेऽस्मिन् सुधृष्टःक एवः ।
मुदा वर्ण्यते यस्य लीला त्रिलोके
स नोपेक्षते रामचंद्रः स्वदासम् ॥"

स्वरचितस्य अध्यात्म रामायण – संक्षेपस्य शुद्धीकरणाय मम कवित्वशक्तेः साहाय्यं अर्थयितु ते उत्तरवयस्काः अपि, प्रत्येककार्यविरामदिने मां द्रष्टुं, अवरनाथतः मध्याह्नातपतापं विगणय्य, लोहपथ-स्थानकात्पद्भ्यामेव आगच्छंति द्रव्या-भावात् । अतीव सुन्दरमासीत्तेषां हस्ताक्षरम् । दुर्दैववशात् तेषु सहसा दिव गतेषु, मम कार्य तावद् अपसार्य तेषां सर्वमपि हस्त-लिखित सपाद्य, ततः सशोधनपूर्वक मुद्रणोचितां सुवाच्यां प्रतिलिपि विधाय, तन्मित्राय प्रकाशनार्थ प्रदाय, सुहृदः आनृण्यं मया नूनं सपादित इति अमन्ये । 'दीपा-वलि-मासिके तत् काव्यं सार्थं सटिप्पणिक च प्रकाशितं दृष्ट्वा अस्मत्त्रयाणामपि श्रमसाफ-ल्यात् संतुष्टः अभवम् ।

१८ कन्यया सह संस्कृतभाषायां संभाषणस्य उपक्रमः

दीर्घरुग्णावस्थायां मया एकस्मिन् दिने निश्चितं यत् कन्यया चि० सुभया सह मया व्यवहारिकं भाषणं गीर्वाणभाषायामेव कर्तुं प्रयति-तव्यम् । ततः अष्टमकक्षायां अधीयानायाः तस्याः ज्ञानं वर्धेत, अहमपि सस्कृतभाषणे अभ्यस्तः भवेयम्, इति उभयोरपि लाभहेतुः, सफलीभूतः कालेन यथासकल्पम् । संभाषण प्रथम सस्कृत-वाक्यम् अनु तस्य मराठी-अनुवादमपि वदामि स्म । अनया व्यवस्थया सुभा नचिरात् विनानु-वादमपि मम सस्कृतभाषणस्य अर्थं जानाति । प्रातः चायपानसमये नवरचितान् श्लोकान् निय-मेन तया पाठयामि तेषां रसग्रहण च तया कारयामि । शालांत-परीक्षार्थं नियुक्तस्य आंग्ल-भाषापाठस्य अध्यापने तु मराठी-अनुवादेन सार्धं तस्य संस्कृतानुवादमपि सद्यः तस्यै कथयामि । अनेन सस्कृतस्य विशेषेण अभ्यासेन सा न केवलं परीक्षायां प्रथमश्रेणीगुणान् सपादयितुं क्षमा अभूत् पर मम काव्यस्य सुवाच्य-प्रतिलिपि-करणेऽपि । 'सुभाषचरितम्'-काव्यस्य बह्वंशेन प्रतिलिपिकरण तयैव कृतम् । मम प्रास्ताविक-निवेदने तद्विषयकः उल्लेखः मया सकौतुकं कृतः ।

१९ संस्कृतपत्रलेखनस्पर्धायां पारितोषिकम् अवाप्तम्

क्षयस्य विशेष-प्रभावेऽपि कल्याणवासिनः श्री गणेशशास्त्रि किजवडेकर-महाशयानां मार्ग-दर्शनेन मया सत्कार्योत्तेजकसभा श्रीवर्धन) इत्य-नया सस्थया आयोजितायां सस्कृतपत्रलेखनस्प-र्धायां, प्रयत्नपूर्वक पत्र लिखित्वा, परितोषिक अवाप्तम् । अस्मिन् विषये चि० सुभया सुवाच्य-लेखनेन डा० श्री० पं० रा० पटवर्धन महाशयैश्च, सूचिकाप्रयोगार्थं (Injection) गृह आगतैः, प्रथम सकौतुक लिखित पठित्वा प्रेषणार्हम् इति प्रोत्साहनेन साहाय्य मे दत्तम् । इद पारितो-षिक कस्मादपि सूजिकाप्रयोगाद् अधिकमेव नून मे उज्जीवनं ददौ ।

(क्रमशः)

(श्रावण २०२४ से आगे)

# देवतास्वरूपमीमांसा

मूल लेखकः श्री अरविन्दः, अनु० श्री जगन्नाथो वेदालङ्कारः, अरविन्दाश्रम, पाण्डिचेरी

## द्वादशोऽध्यायः

विष्णु विशालगतिशाली (उरुक्रमः) देव.। अय खलु स देवो य आत्मानं त्रीभि रूपै, कवि-मनीषि-विधातृरूपैः, अतिचेतनानन्दे, मनसो द्युलोके भौतिकचेतनायाः पृथिव्याञ्च विस्तारयन्, **त्रेधा विचक्रमाणः**, सर्वत्रापि गतो वर्तते—यथा ईशोपनिषद्भाषयोपन्यस्तमृषिणा, **स पर्यगात्** इति। तैस्त्रिभिः पदैः स पार्थिवलोकान् विममे, तानसौ-तदीयसम्पूर्णविस्तारपर्यन्तं विरचयाञ्चक्रे; यतो वैदिकविचारानुसारमस्माकमावासभूतो भौतिको लोक केवलमनेकपदेष्वेकतयो योऽस्मान् स्वस्मात् परतरौ प्राणमयमनोमयलोकौ प्रति-नयति, स्तभ्नाति च तौ। तेषु पदेष्वसौ पृथिव्यामन्तरिक्षे च अर्थाद् भौतिकलोके, क्रिया-शील-**जीवन** तत्त्वस्याऽ**धिपते वायोः** प्राणमयलोकेषु च-त्रिगुणिता दिवं, तस्यास्त्रीणि देदीप्यमान-सानूनि च, **त्रीणि रोचना**, स्तभ्नाति। इमास्तिस्रो दिव. ऋषिः पूर्णत्वसाधनस्योच्चतरधामत्वेन, **उत्तरं सधस्थम्** वर्णयति। पृथवी अन्तरिक्ष द्यौश्च सचेतनसत्तायाः उत्तरोत्तरमात्मपूर्णत्वसाधनस्य त्रिवृत् स्थानम् **त्रिषधस्थम्** (१.१५६.५)। पृथिवी निम्नं स्थानम्, प्राणमयलोको मध्यमम्, द्यौश्च उच्चतरम्। इमे सर्वेऽपि लोका विष्णोस्त्रिविधगतौ समाविष्टाः१ (प्रथमो मन्त्र.)

किन्त्वस्ति अन्यदपि किञ्चित्; अस्ति स लोकोऽपि यत्रात्मपरिपूर्णता संसिद्ध्यति, यश्च विष्णो. सर्वोच्चपदम्। द्वितीयस्यामृचि ऋषिस्तत् केवलं "**तद्**" इति पदेन निर्दिशति, विष्णुः स्वतृतीय-पदे परतरं विक्रममाणः निजदिव्यशक्त्या "**तत्**" प्रस्तौति, सुदृढं प्रतिष्ठापयति वा, **प्रस्तवते**। इतोऽग्रे विष्णोर्वर्णनमीदृशभाषया विहितं या भयावह रुद्रेण सह तस्य तात्त्विकसारूप्य निर्दिशति, तथा हि स एव वर्णित.—लोकानामुग्रो भयङ्करश्च **सिंहो** यः सत्ताया विकासे पशोरधिपत्वेन, पशुपतित्वेन स्वक्रियामारभते, स्वावासभूते सत्ताद्रौ चोर्ध्व-मुखं प्रयाति, उत्तरोत्तरविकटदुर्गमप्रदेशाल्लङ्घमानश्च तावद् विक्रमते य वत् स शिखरेष्ववस्थितो न भवति। तदेवं विष्णोरासु तिसृषु विशालगतिषु पञ्चापि लोकास्तेषा प्राणिनश्च स्वमावासं भजन्ते। पृथिवी, **द्यौः**, "स" आनन्द लोकश्च (**तत्**) इतीमानी त्रीणी पदानि। द्यावापृथिव्योर्मध्ये-चास्त्यन्तरिक्षम् अर्थात् प्राणमयलोका., शब्दार्थ-तस्तु "मध्यवर्तिधाम"। द्युलोकस्यानन्दलोकस्य च मध्येऽन्यद् विस्तृतमन्तरिक्षं "मध्यवर्तिधाम" वाऽऽस्ते **महर्लोकः**, वस्तूनामतिचेतन**सत्यस्य** लोकः। १(द्वितीयो मन्त्र.)

मानवस्य शक्त्या विचारेण च-शक्ति-शालि **रुद्राद्युद्भवन्त्या** शक्त्या सर्जनशीलाद् **वागा-धिपते** र्ब्रह्मणस्पतेरुद्भवता विचारेण च अस्यां बृहद्यातायामस्मै विष्णवे, लक्ष्यस्थाने

१ विष्णोर्नु कं वीर्याणि प्रवोच यः पार्थिवानि **विममे रजांसि**।
यो अस्कभायद् उत्तरं सधस्थं विचक्रमाण-**स्त्रेधोरुगायः**॥

१ प्र तद् विष्णुः स्तवते वीर्येण **मृगो न भीमः** कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेषु **अधिक्षियन्ति भुवनानि विश्वा**॥

ऊर्ध्वशिखरे पर्वतसानौ वा स्थिताय (गिरिक्षिते) विष्णवे, एनं प्रति वा पुरतः प्रयातव्यम्। तस्मै वेयं विशाला विश्वव्यापिनी गतिः, स विश्वस्य **वृषभो** यः शक्ते. सकलोर्जाना विचारस्याशेष पशुयूथानाञ्च (रश्मिगणानाञ्च) रसमास्वादते, तान् फलप्रदांश्च विधत्ते। इद सुदूरविस्तृत विशाल स्थानं यदस्माकमात्मपूर्णत्वसाधनस्य लोक महायज्ञस्य त्रिवृद्वेदिश्च प्रतीयते, तस्य **सर्वशक्तिमतोऽनन्तस्य** त्रिभिरेव पदैरित्थ विमित विरचितञ्च। १ (तृतीयो मन्त्रः)

इमानि त्रीण्यपि पदानि सत्तानन्दस्य मधुरसेन परिपूर्णानि। तानि सर्वाण्यपि अयं विष्णु. स्वसत्ताया दिव्याह्लादेन पूरयति। तद्द्वारा तानि नित्यतया धृतानि भवन्ति, न क्षीयन्ते, न वा नश्यन्ति, किन्तु निजस्वाभाविकगतेरात्मसामञ्जस्ये सदैव स्वविशालनि सीमसत्ताया अक्षयमानन्दम् अविनश्वरमदञ्च धारयन्ति। विष्णुस्तानि निष्प्रमादं धारयति, अक्षय्यतया रक्षति। स **एको** देवः, केवलं स एव अस्तित्ववान्, एक एवाद्वितीय. **परमदेवः**, स स्वसत्ताया तत् त्रिविधं दिव्यतत्त्वं (त्रिधातु) धारयति यद्वयम् आनन्दलोकेऽधिगच्छामः, अपि च सोऽस्माकमाधारभूता पृथिवी तां दिवञ्चापि धारयति या वयं स्वान्तःस्थितमनोमयपुरुषेण संस्पृशामः। सर्वानपीमान् पञ्चलोकान् स धारयन्नास्ते। २ (चतुर्थो मन्त्र.)

त्रिधातु अर्थात् सत्तायास्त्रिविध तत्त्वं त्रिविधमुपादानं वा वेदान्तस्य सच्चिदानन्द एव, वेदस्य सामान्यभाषायामिद **वसु ऊर्ज**, **प्रियंमयो** वा प्रोच्यते, वसु अर्थात् सत्तत्त्वं, **ऊर्ज्** अर्थादस्मत्सत्तायाः प्रचुरशक्ति, **प्रियम् मयो** वा अर्थादस्माक सत्ताया सत्ये सारतत्त्वे विद्यमान आनन्दः प्रेम च। एभिस्त्रिभिरेव वस्तुभिः सर्वमपि सत् (अस्तित्ववद्वस्तुमात्रम्) विरचितम्, एषा पूर्णत्व च वयं तदा प्राप्तुम यदा वयं स्वयात्राया लक्ष्यमधिगच्छाम.।

तल्लक्ष्यञ्चानन्द, विष्णोस्त्रिषु पदेष्वन्तिमम्। "तत्" इत्यनेन येन अनिश्चितशब्देन ऋषिरिममानन्द पूर्वमस्पष्टतया निरदिशत् तमेव शब्दं स पुनरूपादत्ते। अय शब्दो विष्णोर्गतेर्लक्ष्यभूतमानन्द सङ्केतयति। मनुष्यस्यारोहणक्रमे आनन्द एव तत्कृते स लोको यस्मिन् स दिव्याह्लादमास्वादते, असीमचेतनाया. पूर्णशक्ति धारयति,निज नि सीमसत्ताञ्चानुभवति। तत्र सत्ताया मधुरसस्य स ऊर्ध्वस्थ उत्सः यस्य मधुना विष्णोस्त्रीणि पदानि पूर्णानि। तत्रैव तस्य माधुर्यरसस्य परिपूर्णानन्दे देवत्वकामा आत्मानो निवसन्ति। तत्र तस्मिन् परमे पदे, विशालगतिशालिविष्णोः सर्वोच्चधामनि मधुरसस्य निर्झरः, दिव्यमाधुर्यस्य मूलस्रोत.—यत तत्र यो निवसति स खलु परमो **देवः**, तमभीप्सूनामात्मनां पूर्ण **सखा प्रेमिकश्च** अर्थाद् विष्णो. सा निश्चला पूर्णा च वस्तुसत्ता या प्रति विश्वस्य उरुक्रमो **देव** (विष्णुः) आरोहति।१ (पञ्चमो मन्त्रः)

द्वौ खल्विमौ, अत्र तावद् गतिशाली विष्णुस्तत्र च नित्यनिश्चल आनन्दास्वादको विष्णु **देवः**;

---

१ **प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे। य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभि.॥**

२ **यस्य त्री पूर्णा मधुना पदानि अक्षीयमाणा स्वधया मदन्ति। य उ त्रिधातु पृथिवीम् उतद्याम् एकोदाधार भुवनानि विश्वा॥**

१ **तदस्य प्रियम् अभि पाथो अश्याम् नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः॥**

अस्य युगलस्य तानि परमनिवासस्थानानि, **सच्चिदानन्दस्य** त्रिगुणितभुवनमव वा वयमस्याः सुदीर्घयात्रायाः, महत्या ऊर्ध्वमुखगतेर्लक्ष्यत्वेन प्राप्तुमिच्छाम । तदभिमुखमेव सचेतन**विचारस्य**, सचेतन**शक्तेर्भू**रिशृङ्गा गावो गतिपरायणाः सन्ति— तदेव तासां सर्वासां लक्ष्यं विश्रामस्थानञ्च । तेषु भुवनेष्वेव तासां सर्वासां बहुशृङ्गगवामधिपस्य नायकस्य चास्य विशालगतिशालि**वृषभस्य** विराड् **देवस्य**, अस्मदात्मनां **प्रेमिणः सुहृदश्च**, परात्परसत्तायाः परात्परानन्दस्य **चाधिपतेः** सर्वव्यापिविष्णोः परमपदस्य सर्वोच्चधाम्नो वा विशाला परिपूर्णा निःसीमा च प्रभा वरिवर्त्ति याऽत्रास्मासु अवभासते । १ (षष्ठो मन्त्र.)

१ ता वां वास्तूनि उश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तद् उरुगायस्य वृष्णः परमं पदम् अवभाति भूरि ॥

—०—

# त्रयोदशोऽध्यायः

सोमः आनन्दामृतत्वयोरधिपतिः

ऋ० ६.८३

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद् वहन्तस्तत्समाशत ॥१॥

(ब्रह्मणस्पते) हे अस्मदात्मनः स्वामिन् ! (पवित्रं ते विततम्) तव परिपाविका चालनी त्वदर्थं वितता वर्तते, (प्रभु.) प्राणिनि प्रकटीभूय त्वं (विश्वत. गात्राणि पर्येषि) तस्याङ्गानि सर्वतः व्याप्नोषि । ( आमः ) योऽपरिपक्वः (अतप्ततनू ) यस्य तनुश्चाग्नेस्तापे न सन्तप्ता (स) तत् (न अश्नुते) तस्यानन्दस्यास्वाद न प्राप्नोति। (शृतास इत्) ये ज्वालया [ पक्वतामापाद्य ] सिद्धीकृताः त एव (तद् वहन्तः) तद् धारयितु समर्थाभवन्त· (समाशत) आस्वादितु प्रभवन्ति ॥१॥

तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधितिष्ठन्ति चेतसा ॥२॥

(तपो.पवित्रम्) (तस्य सोमस्य) आग्नेयरसस्य पावनी चालनी (दिवस्पदे विततम्) **दिवः** पृष्ठे वितताऽऽस्ते, (अस्य तन्तवः) अस्याः सूत्राणि (शोचन्त.) दीप्यमानानि सन्ति (व्यस्थिरन्) प्रसृतानि तिष्ठन्ति । (अस्य आशवः) अस्य सोमस्य तीव्रा आनन्दरसाः (पवीतारम्) स्वशोधकमात्मानम् (अवन्ति) प्रीणयन्ति, ते (चेतसा) सचेतनहृदयेन (दिव पृष्ठम् अधितिष्ठन्ति) **दिवः** उच्चस्तरमारोहन्ति ॥२॥

अरूरुचदुषस. पृश्निरग्रिय उक्षा बिभर्त्ति भुवनानि वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षस· पितरो गर्भमादधुः ॥३॥

(अग्रिय. पृश्नि ) अयं सर्वश्रेष्ठः शबलः **वृषभः** एव (उषसः अरूरुचत्) **उषसः** प्रकाशयति । (उक्षा) अयं वृषा **पुरुषः** भुवनानि बिभर्ति) सम्भूतेर्लोकान् धारयति । अपि चायं (वाजयुः) (वाजं) समृद्धिमात्मनः कामयते । (**मायाविनः** पितरः) निर्मायकज्ञानेन सम्पन्ना **पितरः** ( अस्य

मायया) अस्य सोमस्यैव ज्ञानशक्त्या (ममिरे) तस्य प्रतिमां निर्ममुः । (नृचक्षसः) दिव्यदर्शने दृढास्ते (गर्भम् आदधुः) तम् उत्पत्स्यमानशिशुमिव स्वान्तरधारयन् ॥३॥

गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुत ।
गृभ्णाति रिपु निधया निधापति सुकृत्तमा मधुनो भक्षमाशत ॥४॥

(गन्धर्व) **गन्धर्वरूपो**ऽसौ सोमः (अस्य इत्था पद रक्षति) अस्य **देवस्य** सत्यं पद रक्षति, (अद्भुतः) परमोच्चः अद्भुतश्च 'एकः' सन्नसौ) (देवानां जनिमानि पाति) देवाना जन्मानि रक्षति । (निधापति) आन्तरिकनिधानस्य (व्यवस्थापनस्य) अधिपतिरसौ (निधया) आन्तरिकनिधानेन (रिपु गृभ्णाति) शत्रु निगृह्णाति । (सुकृत्तमाः) कर्मसु पूर्णसंसिद्धि प्राप्ताः सिद्धाः (मधुन भक्षम्) तदीयमधुनो माधुर्यस्य भोगम् (आशत) आस्वादन्ते ॥४॥

हविर्हविष्मो महिसद्मदैव्य नभो वसान. परियास्यध्वरम् ।
राजा पवित्ररथो वाजमारुह सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥५॥

(हविष्म) हे हविष्मन् ! हविरन्नमस्मिन्नस्तीति, तथाभूत सोम ! त्व (हविः) तद्दिव्यमन्नमसि (महि) विशालोऽसि, (दैव्य सद्म) दिव्यसदनमसि, (नभः वसानः आकाशं वसनमिव परिदधानस्त्वम् (अध्वर परियासि) यज्ञस्य यात्रा परितः व्याप्नोषि । (पवित्ररथः राजा) परिशोधकचालनीरूपरथेन युक्तो राजा त्वम् (वाजम् आरुहः)विपुलसमृद्धि प्रत्यारोहसि; (सहस्रभृष्टि) निजजाज्ज्वल्यमानप्रभासहस्रैः सम्पन्नस्त्वम् (बृहत् श्रवः जयसि) विशालं ज्ञानं जयसि ।

## भाष्यम्

अस्त्येकं वैदिकसूक्तानां सुस्पष्टं सारभूतञ्च वैशिष्ट्यम् तच्चेदम्—यद्यपि वैदिकसम्प्रदाय 'एकदेववादी' इतिशब्दस्याधुनिकेऽर्थे एकदेववादी नासीत् तथापि वैदिकसूक्तानि क्वचित् सर्वथा स्पष्टसरलशैल्या क्वचिच्च विषमजटिलरीत्या, परं सदैव मलवर्तिविचाररूपेणैतन्निरन्तर स्वीकुर्वन्ति यन्मन्त्रेष्वावाहिता अनेके देवा वस्तुतः **एक एव परमदेवो** यो बहुनामभिः कीर्तित, यश्चानेकरूपैः प्रकटीभूत, अनेकदिव्यव्यक्तित्वाना (देवताना) छद्मवेशेन च मनुष्यमुपसीदति । इय धार्मिकविचारशैली भारतीयमनसः समक्ष कमपि क्लेशम् नोपस्थापयति किन्तु पाश्चात्यविद्वासो वेदस्यानया शैल्या विमूढाः सन्तः अस्या व्याख्यार्थ वैदिकैकसत्तावादस्य (Henotheism) सिद्धान्तमाविष्कृतवन्त. । तेषां मतेन वेदर्षयो बहुदेववादिन एवासन्, किन्तु प्रत्येकदेवाय तस्य तस्य पूजा वसरे सर्वाधिकं प्राधान्यमददुः, किम्बहुना तदा ते दृष्टिविशेषेण तमेवैकमनन्यदेवममन्यन्त । 'हीनोथीज्म' मतस्यायमाविष्कारो एकदिव्यसत्ताविषयकभारतीयविचारस्यावबोधार्थं व्याख्यार्थञ्च विदेशीयमनोवृत्या विहितः प्रयत्न एव । स भारतीय विचारश्चायम्—**दिव्यसत्ता (देवता)** वस्तुत एकैव याऽऽत्मानमनेकनामरूपैरभिव्यनक्ति, तेषु नामरूपेषु प्रत्येकं तदुपासकाय एक परमश्च देवो भवति । परमदेवविषयकोऽयं विचार पौराणिकसम्प्रदायानामाधारभूत अयञ्चास्माकं वैदिकपूर्वजैः पूर्वमेवोपलब्धोऽभूत् ।

वेदे ब्रह्मणो वैदान्तिकविचारो बीजरूपेण पूर्वमेवान्तर्निहितः । वेदोऽज्ञेयं कालातीतञ्चैकं सत् स्वीकरोति, तत् परमतत्त्वमभ्युपगच्छति यत् नाद्य

